BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 1166.

# BALAMBHAṬṬĪ.

## A COMMENTARY ON THE MITAKṢARA.

# बालम्भट्टी

## लक्ष्मी-इत्यपरनाम्नी

मिताक्षराव्याख्या

**स्वपत्नीलक्ष्मीदेवीनाम्ना**

बालम्भट्टपायगुण्डेन

विरचिता ।

श्रीगोविन्ददासेन संशोधिता ।

VOL. II. FASCICULUS I.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1907.

Digitized by Google

GRAD
SASIA
[illegible]
Vaidyanatha
Payagunde

# बालम्भट्टी । Balambhatti

## मिताक्षराव्याख्या ।

### अथ व्यवहाराध्यायः ।

१ । सहार्थे । पूर्वाध्याये दुष्टदण्डस्य शिष्टरक्षणस्य च विधानादन्वयव्यतिरेकाभ्यां अपितेत्यां पालनाधिकारिणाऽवश्यं व्यवहारदर्शनं कर्त्तव्यमित्युक्तम् । तस्य व्यवहारस्य स्वरूपप्रकारेतिकर्त्तव्यताकाङ्क्षायामयमध्याय इत्याह । **अभिषेकादीति** । यद्वा व्यवहारान् स्वयमित्यादिना प्रयोगविधिना साङ्गोपाङ्गो व्यवहारः कर्त्तव्यतया विहितः पूर्वाध्याये । तत्राङ्गाद्याकाङ्क्षायामाह । **अभीति** । हेतुहेतुमद्भावरूपसम्बन्धोऽनयोरध्याययोः सङ्गतिर्बोध्या ।

२ । उक्तौ हेतुमाह । **व्यवेति** । पञ्चम्यर्थे वाक्यालङ्कारे वा । कीदृश इति स्वरूपप्रश्नः कतिविध इति प्रकारप्रश्नः । कथं चेतीतिकर्त्तव्यताप्रश्नः । **इतिकर्त्तव्यतेति** । इत्याकाङ्क्षायामवश्यं वक्तुमुचित इत्यादिः । स्वरूपप्रकारेतिकर्त्तव्यताकलाप इत्यर्थः अङ्गादिकलाप इत्यर्थो वा ।

३ । आद्यश्लोकेन त्रयाणामप्युत्तराणीति ध्वनयन् स्वरूपप्रश्नस्याद्यस्य प्रधानत्वोत्तरमभिहितमिति प्रतिपादयन् तत्स्वरूपमाह । **अन्येति** । अनेन भावे घञ् तच्च सूचितः । धातूनामनेकार्थत्वात्तदर्थलाभः । अयं च रूढ्यर्थः । योगार्थस्तु नानासन्देहहरणम्,



Digitized by Google

F.-1D
508
58
30.162
1.2



वि नानार्थे ऽव सन्देहे हरणं हार उच्यते।
नानासन्देहहरणाद् व्यवहार इति स्मृतः॥

इति कातीयात्। स्पष्टत्वाय तमुदाहरति। यथेति।
द्वितीयोत्तरमाह। तस्येति। प्रातिपदिकोदितव्यव
प्रत्ययेन द्वितीयाबहुवचनेन भेदो दर्श्यते इत्यर्थः।

४। पूर्वमनुवाक्येन प्रतिपादितमर्थं राजेत्येव वाच्ये स्वयं
सिद्धाऽधिकनृपपदोक्तिस्वारस्येन प्रतिपादयति। नृप
यौगिकोऽयं न रूढ इति भावः। अत एव युक्तस्येति सामा
एवादावुक्तम्। *इतिना करणत्वं तच्च तस्योच्यते। ख्यापियेति।
अभिषिक्तस्य तस्यैवेत्यर्थः। अपिनाऽस्यैव समुच्चयः। व्यवहारान्
स्वयमित्यस्य विधित्वेन पश्येदिति पुनर्विधिवैयर्थ्यं परिहरति।
पश्येदितीति। धर्मेति। विद्वद्ब्राह्मणसाहित्यादिरूपधर्मविशेषे-
त्यर्थः। तथा च व्यवहारान्नृपः पश्येदिति यत् तद्विद्वद्भिर्ब्राह्मणैः
सह धर्मशास्त्रानुसारेण तादृशः स इति योजना बोध्या। एतेनास्य
वैयर्थ्यं परिहृतम् अन्यथा तेनैव सिद्धेऽस्य वैयर्थ्यं स्पष्टमेव।

५। तमेव धर्मविशेषमाह। विद्वद्भिरित्यादिना। स एव

---

* नृप इति न क्षत्रियमात्रस्यायं धर्म इति मूलवाक्यस्थेन इतिपदेन नृपपदस्य प्रदर्शने करणत्वमुच्यते इत्यर्थः। दर्शयतीत्याख्यातोपात्तं कर्तृत्वं तु याज्ञवल्क्यस्येति भावः। तथा च नृप इति पदेन स्मृतिकारः "न क्षत्रिय मात्रस्यायं धर्मः, किं तु प्रजापालनाधिकृतस्यान्यस्यापीति" दर्शयती-त्यन्वयार्थः।

Digitized by Google

धर्म इतिकर्त्तव्यता । सा चाङ्गानुष्ठानप्रकारः । एवं चास्य श्लोकस्यैव प्रपञ्चः सकलोऽध्यायशेष इति भावः । ब्राह्मणैरित्यस्य फलमाह । नेति ।

६ । धर्मविशेषविधानार्थत्वेनास्य प्राप्तं व्यवहारदर्शने नृपस्य ब्राह्मणानां च समप्राधान्यं निराचष्टे । ब्राह्मणैस्सहेतीति । तेषां ब्राह्मणानाम् । ननु तावता कथं तत्त्वमत आह । सहयुक्त इति । सहार्थेन योगे ऽप्रधाने तृतीयेति तदर्थः । यथा पुत्त्रेण सहागतः पितेत्यादौ शाब्दक्रियाद्यनन्वयित्वरूपमप्राधान्यं पुत्त्रादेस्तथा प्रकृतेऽपीति तदर्थत्वेऽपि न तथेति भावः । एतत्फलमाह । अतश्चेति । न ब्राह्मेति । आद्ये तथा सत्त्वेऽपि द्वितीये राज्ञो दोषो य उक्तः स ब्राह्मणानां नेत्यर्थः । उक्तहेतोः । न तु सर्वथा दोषाभावोऽभिमतः । सभा वा न प्रवेष्टव्येत्यनेन विरोधापत्तेरिति बोध्यम् ।

७ । तेषां तत्र कथनेनैव तल्लाभे शास्त्रान्तरस्थावश्यकत्वेनैव निरासे तदुक्तिफलमाह । नार्थेति । अत एव मिथः समवाये ऽस्य प्राबल्यं न तस्येति वक्ष्यति । न्यूनतां परिहरति । देशादीति । आदिना देवगृहादिपरिग्रहः । पारिभाषिकधर्मेण व्यवस्थानं समयः । तत्सिद्धदेशादिसम्बन्धिधर्मस्येत्यर्थः । विरुद्धस्य त्याज्यत्वस्योक्तत्वादाह । धर्मेति । वक्ष्यतीति । संविद्व्यतिक्रमप्रकरणे योगीश्वर इति भावः । क्रोधेति प्रतीकम् । सिद्ध इति । तयोस्तत्र निषिद्धत्वात्सामान्येन सर्वत्रेति भावः । आदरेति । अत्र विशेषेण तत्त्यागार्थमित्यर्थः ।

Digitized by Google

मनुरपि, (अ. ८ श्लो. १-३।)

व्यवहारान् दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः।
मन्त्रज्ञैर्मन्त्रिभिः सार्धं विनीतः प्रविशेत्सभाम्॥
तत्रासीनः स्थितो वाऽपि पाणिमुद्यम्य दक्षिणम्।
विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम्॥
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः।
अष्टादशसु मार्गेषु निबद्धानि पृथक् पृथक्॥
*धर्माश्रयमधिष्ठाय संवीताङ्गः समाहितः।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत्॥

इति। व्यवहारान् अर्थिप्रत्यर्थिनोर्विवादविषयोक्तीः दिदृक्षुः निर्णिनीषुः पार्थिवः पृथिवीपतिः क्षत्रियादन्योपि मन्त्रज्ञैः देशकालाद्युचितकार्याकार्यनिरूपणाभिज्ञैः। एतच्च ब्राह्मणैरित्यस्य विशेषणम्। अमन्त्रज्ञा हि ब्राह्मणा देशकालाद्यननुरूपं धर्ममपि सहसा ब्रुवन्तो राज्ञः कश्चिदनर्थमापादयेयुः। मन्त्रिभिः बुद्धिसचिवैः विनीतः सहजाहार्योभयविनययुक्तः पाणिमुद्यम्य उत्तरीयादुद्धृत्य वस्त्रोपसंव्यानं कृत्वेति यावत् पश्येत् निश्चिनुयात् कार्याणि ऋणादानादीनि। देशदृष्टा हेतवः देशविशेषव्यवस्थितानि निर्णयसाधनानि। यथोदीच्यमध्यमानां, कन्यां याचमानाय भोजनं यदि दीयते तदा तुभ्यं देयेत्यनुक्तेऽपि प्रतिश्रुता भवतीति। शास्त्रदृष्टाः साक्षिप्रभृतयः॥ १॥

---

* अयं श्लोकः मनुसंहितापुस्तके नोपलब्धः।

Digitized by Google

१। प्राग्युक्तब्राह्मणेभ्यः सभ्याः पृथक् कार्या इत्याह। **किं चेति** । श्रुतेत्यस्य वेदशास्त्रसम्पन्ना इति शब्दोऽर्थस्तत्फलितमाह । **श्रुतेनेति** । अत्र द्वावपि भावप्रत्ययान्तौ क्रियापरौ । अन्यथा धर्मज्ञानस्यानुपयोगात् । धर्मशब्दो लक्षणया शास्त्रपर इत्याह । **धर्मशास्त्रेति** । तात्स्थ्ये णिनिरित्याह । **शीला इति** । एतानुद्दिश्य सभासत्त्वं विधीयते इत्याह । **एवंभूताः** । **सभेति** । विधेयार्थमाह । **सभायामिति** । तदर्थमाह । **संसदीति** । सीदन्तीत्युक्तस्य व्याख्या । **यथोपेति** । धातूनामनेकार्थत्वादिति भावः । बलात्कारनिरासायाह । **दानेति** ।

२। एते सभासदोऽपि ब्राह्मणा एवेत्याह। **यद्यपीति** । तस्य चितयसाधारणत्वादिति भावः । **सत्विति** ।

विनीतवेषो नृपतिः सभां गत्वा समाहितः ।
आसीनः प्राङ्मुखो भूत्वा पश्येत्कार्याणि कार्यिणाम् ॥

इति, इतः पूर्वश्लोकः । स राजा स्थिरैर्भयतोऽचञ्चलैः प्राज्ञैर्बुद्धिमद्भिः मौलैः पितृपितामहादिपरम्परायातैः द्विजोत्तमैः ब्राह्मणैः । सप्तमीतत्पुरुषः । धर्मशास्त्रं मानवादि तस्य योऽर्थः सिद्धान्तस्तत्र निष्णातैः अर्थशास्त्रमौशनसादि तत्र तथा ।

३। ननु बहुत्वस्य त्रित्वादिपरार्द्धपर्यन्तसंख्याव्यापकत्वेन तत्र ते कति कार्या इत्यत आह। **ते चेति** । सभासद इत्यर्थः । *कपिञ्जलाधिकरणन्यायेनेति भावः । त्रय इत्यस्य त्रय एवेत्यर्थः ॥

* "कपिञ्जलानालभेत" इति श्रुतौ कपिञ्जलाः कति ग्राह्या तत्र शङ्कायाम् पूर्वोपस्थितत्वात् त्रित्वसङ्ख्याविशिष्टा इति तदधिकरणे। तद्वदत्रापि त्रयः सभासदः कार्या इति भावः । ॥ २ ॥

Digitized by Google

एतेन पूर्वापरकोट्योर्निरासः। तत्राद्ये हेतुमाह। बहुवचनेति। द्वितीये हेतुमाह। यस्मिन्निति। इतोऽपि तत्र ब्राह्मणा एवेत्यपि बोध्यम्। एवमग्रेऽपि बोध्यम्।

४। मतान्तरमाह। बृहस्पतिस्त्विति। उत्तमादिभेदेनाह। सप्तेति। वेदशब्दः शास्त्रस्याप्युपलक्षणम्। लोकशब्दो देशकालादिपरः। यद्वा स तदन्यसर्वपरः। धर्मशब्दः शास्त्रपरः। प्राधान्यात्तस्य पुनरुक्तिः। यत्र सभायाम्। यज्ञेति। यज्ञसभासदृशीत्यर्थः। यदि तु एतदनुरोधेन मानवे त्रय इत्युपलक्षणं मध्यमपक्षपरं वा तदा एकवाक्यतैव न पक्षान्तरम्। अत्र पक्षे ते च त्रय इत्यपि तथेति न भेद इति बोध्यम्। परन्तु ते च त्रय इति बृहस्पतिस्त्विति च वदतो विज्ञानेश्वरस्य न सम्मतमिदमिति बोध्यम्।

५। ननु व्यवहारान्नृप इत्यत्रोपात्तविद्वद्ब्राह्मणोद्देशेन श्रुताध्ययनसम्पन्नत्वादिरूपो धर्मोऽनेन विधीयताम्। तथा च विद्वद्ब्राह्मणविशेषत्वाच्छ्रुताध्ययनसम्पन्नादेर्नप्रागुक्तेभ्य एते सभासदो भिन्ना इति किं चेत्यवतरणासङ्गतिरित्याशयेनाशङ्कते। न चेति। समानविभक्तिकनामार्थयोरभेदान्वय इति व्युत्पत्तेराह। तृतीयेति। *वचनक्रमेणेत्यमुक्तम्। अभेदस्य संसर्गत्वाभावादाह। विशेषणेति।

---

* विभक्तिक्रमे प्रथमायाः पूर्वत्वेऽपि व्यवहारान् नृपः पश्येदिति वचनस्य श्रुताध्ययनसंपन्ना इति वचनापेक्षया पूर्वत्वात् तत्र च तृतीयाया शाब्द् वचनपर्यालोचनायां तृतीयायाः प्रथमोपस्थितत्वात् पूर्वमुक्तिः। च तृतीयाप्रथमान्तनिर्दिष्टानामिति मूलवाक्ये न काचिदनुपपत्तिः वः।

मन्वध्याहारेण तत्सम्भवोऽत आह। विद्वद्भिरिति। ननु विदद्भि-
रित्यस्यैव विवरणपरमिदमिति न पुनरुक्तिप्रसक्तोऽत आह। चेति।
तेन यच्छब्दोक्तिर्वैयर्थ्यापत्तिसमुच्चयः। स हि विधेयत्वप्रतिबन्धकः।
तथा च तद्बलादेव मिथ उद्देश्यविधेयभावः स्वरसतः प्रतीयते।
तत्र च प्राप्ताप्राप्तविवेकन्यायेन लोकादिसिद्धश्रुताध्ययनसम्पन्नादिक-
मुद्दिश्य सभासत्त्वं विधीयते इति भावः।

६। यच्छब्दस्य पूर्वपरामर्शकत्वे ऽपि कात्यायनविरोधरूपदोषा-
न्तरमपि सूचयन्नाह। तथा चेति। तथा च तदुद्देशेन तद्विधिर्न
घटते इति ते एव सभासद इति वक्तुं न शक्यते इति भावः।

७। स इति। प्रागुक्ताधिमोऽयम्। प्राड्विवाकेन सहितः।
प्राड्विवाको राजप्रतिनिधिः। प्राड्विवाकाक्षदर्शकावित्यमरः।
अमात्या बुद्धिसचिवास्तत्सहितः। ब्राह्मणाश्च पुरोहितश्च तैः
सहितः। सभ्यैः सहितः। अनेन सर्वेषामङ्गत्वमुक्तम्। धर्मत-
त्त्वशास्त्रतः। प्रेचक इत्यर्थः।

८। तत्र सभ्यब्राह्मणयोर्मध्ये। अनीति। राज्ञेति शेषः।
एवमग्रेऽपि। तथा मूलानुक्तेः। सभेति। तथा मूलोक्तेः।
तथा भेदोक्तेः फलभेदमाह। तत्रेति। प्राग्वत्। तं राजानम्।
तद्भागिन इति। राजसम्बन्धिदोषभागिन इत्यर्थः। एवं च
प्रागुक्तदोषशब्दो विशेषपरो बोध्यः। पुनस्तर्थे।

९। न्यूनतामशङ्कानिराशाय सर्वथा ऽनावश्यकमूलस्थचशब्देन
परिहरति। रिपाविति। वित्तान्तपञ्चानां द्वन्द्वान्मतुप्। तत्र
कुलवत्त्वं कुलीनत्वम्। कुलभूतैरित्यस्य परम्परायातैरित्यर्थः॥ २॥

Digitized by Google

१। ननु राज्ञः प्रतिदिनं व्यवहारदर्शनवत् कार्यान्तराण्यपि कर्त्तव्यत्वेन विहितानि तत्र दैवात्समवाये किं कार्यमित्याशङ्कायामाह। **व्यवहारेति**। अत एव तुः। तेन तदत्यागसूचनद्वारा तस्यात्यावश्यकत्वं सूचितम्। कार्यवशादित्यस्य व्याख्या। **कार्यान्तरेति**। आह्निकाद्यावश्यकोक्तभिन्नकार्येत्यर्थः। **सह** सहितः। अनेन प्रागुक्तेभ्यः सर्वेभ्यो भिन्नोऽयमिति सूचितम्।

२। सर्वपदस्वारस्यादाह। **सामेति**। देशादिसमयधर्मानित्यर्थः। विन्ते विचारयतीति सर्वपाठः वेत्तीति पाठे वेत्तीत्यस्य तत्पूर्वकं जानातीत्यर्थः। प्रकरणात्तल्लाभे तदुक्तिफलमाह। **न स्वयमीति**।

३। यतोऽयं सर्वतो भिन्नो ऽत एव विशेषमाह। **तं चेति**। ब्राह्मणं चेत्यर्थः। **यथाहेति**। **कात्यायन** इति अर्थः। **मध्येति**। पक्षपातरहितमित्यर्थः। **परत्र** परलोकविषये। **उद्युक्तम्** अनलसम्।

४। मुख्यपक्षोक्तिपरतया मूलस्य न न्यूनतेति सूचयन् स्मृत्यन्तरारोधेनानुकल्पमाह। **एवंभूतेति**। **ब्राह्मण इति**। उक्तगुणविशिष्ट इत्यर्थः। अन्यथा स्वोक्तिवैयर्थ्यमेव स्यादिति बोध्यम्। **यत्नेनेति**। तस्य धर्मशास्त्रादावनधिकारादिति भावः।

५। मतान्तरमाह। **नारदेनेति**। **अयमेवेति**। योगीश्वरोक्तब्राह्मणरूपानुकल्पत्वेनोक्त एवेत्यर्थः। राज्ञो बहुकार्यव्याकुलत्वेनावकाशाभावादिति भावः। **पुरस्कृत्येति**। अत्र प्रस्तुतत्वाद्राजनियुक्तोक्तपुरुष एव तत्र कर्त्ता बोध्यः। अत एव

सत्यप्रतिष्ठः स्मृतो धर्मो धर्ममूलो नराधिपः।

सह सभ्यैरतो राजा व्यवहारांश्चिशोधयेत् ॥

इत्यग्रे तेनैवोक्तम् । व्यवहारानन्विति युक्तः पाठः । एतदेव स्पष्टयति । प्राड्विवाकेति । मते बुद्धौ । धर्मशास्त्रानुसारेणेति भावः । स्थितः राजा । तस्य सत्त्वेनैव तल्लाभे पुनस्तदुक्तिफलमाह । न स्वेति । नन्वेवं प्राड्विवाकेन कृतस्य अवणेऽपि तस्य तद्दर्शनाभावेन कथं स पश्येदित्यत आह । राजेति । तथा च स्वप्रतिरूपकप्रागुक्त-पुरुषद्वारेण तद्दर्शनस्यौचित्येनायमेव पक्षो ज्यायानिति बोध्यम् ।

६ । धर्मशास्त्रानुसारेण कृतस्य तस्य यौगिकीयं संज्ञा नाश्वकर्णा-दिवद्रूढिरित्याह । तस्येति । प्राड्विवाकस्येत्यर्थः । संज्ञेति । अन्वर्थं नामेत्यर्थः । प्राडिति । क्विब्वचीत्यादिना निष्पन्नो ऽयं क्विबन्तः । तयोरर्थिप्रत्यर्थिनोः । विविनक्ति विवेचयति विचारयति । अत्र पक्षे औणादिकत्वं कल्प्यमत आह । विवक्ति वेति । विविच्य विचार्य कथयतीत्यर्थः । एतेन विशेषेण कथयतीति व्याख्यानम-पास्तम् । हलश्चेति घञ् । स चार्षत्वात्कर्त्तरि । यद्वा भावघञन्तादर्श आद्यच् । मूलं तु फलितार्थपरतया नेयम् । यद्वा करणे बाहुल-कात्स्युडभावे घञ् । अत एव येनेत्यग्रे उक्तम् । मूलं तु प्राग्वदेव । कातीयमेवाह । उक्त्वेति । एतत् । उक्तं वचनम् ॥ ३ ॥

७ । अन्यदपि राज्ञा कर्तव्यमित्याह । अपि चेति । अपिना शेषसमुच्चयः । तथा चाज्ञानभ्रान्त्यादिरूपोपाधिभि-र्धर्मशास्त्रविरुद्धमाचरतां तेषां न दण्डोऽयमिति भावः । सभ्या इति । नियुक्ता इत्यर्थः । तेषामेव तत्त्वस्य प्रागुक्तत्वात् । अत एवा-नियुक्तानां तदपेक्षया न्यूनदण्डपरिकल्पना । युक्तं चैतत् । नियुक्ता-



Digitized by Google

नामभियुक्तत्वेन धर्मशास्त्रविरुद्धाचरणादधिकापराधः तद्भिन्नानां तु तदभावादल्पापराधः । आद्येषु राजाज्ञाभङ्गः स्मृत्युल्लङ्घनं च अन्येषु स्मृत्युल्लङ्घनमेवेति यावत् । तदेतदभिप्रेत्याह । **पूर्वोक्ताः सभ्या इति ।**

२ । रागादौ हेतुं पूरयति । **रजस इति ।** यत्किञ्चिद्रागादेः साधारणत्वादाह । **स्नेहातीत्यादिः ।** वाशब्दस्य प्रत्येकं विकल्पबोधकत्वादाह । **लोभादेति ।** अन्त्यासाद् वेति च । विवादपदस्य यथाश्रुतार्थत्वे तद्द्वैगुण्यस्य दमे ऽसम्भवाल्लक्ष्यार्थमाह । **विवादेति ।** ननु अन्यथाऽपि लक्ष्यार्थस्य सम्भवादेवमेव व्याख्याने किं बीजमत आह । **न पुनरिति । तथा हि सती**ति पाठः । हिर्हेतौ । **स्त्रीसङ्ग्रहणादिष्विति** पाठः । स्मृत्यपेतेत्यत एवार्थलाभे रागाद्युक्तिफलमाह । **रागेति ।** इदमुपलक्षणं द्वेषस्यापि । **ईप्से** नियच्छति । कर्मणः शेषत्वविवक्षया षष्ठी । **वर्जमिति ।** णमुलन्तम् । तथा चानियुक्तानां तेषामल्पदण्डोऽपि कथमिति भावः ।

३ । **तस्य गौतम**वाक्यस्य विधित्वाभावात्, तस्य वधातिरिक्तदण्डप्रतिपादकवाक्यानामानर्थक्यापत्तेश्चेति भावः । तथा सति तद्विरोधान्तरं परिहरति । **यस्त्विति ।** दोषैः प्राप्तः षड्भिः प्रकारैस्त्याज्य इत्यर्थः । ब्राह्मण इति प्रकरणप्राप्तम् । तत्प्रकारत्यागमेवाह । **अवध्य इत्यादि ।** चो वाक्यालङ्कारे । **अदण्ड्य** इत्यनेन धनदण्डाभावः । **अपरिवाद्य** इत्यनेन धिग्वाग्दण्डयोरभावः । **अपरिहार्य** इत्यनेन सर्वस्वहरणाभावः । अन्यत् स्पष्टम् ।

४ । षड्भिरित्यस्य पूर्वतन**गौतम**माह । **स एष इति ।**

बहुभ्यो बहुशश्च श्रुतं येन सः। तत्साधनमाह। लोकेति। लोकः सदाचारः त्रयः सप्त वा लोका वा। वेदः त्रयी। शिक्षादीनि षड् वेदाङ्गानि। वाकोवाक्यम् उक्तिप्रत्युक्तिमद्वाक्यम्। इतिहासो भारतादि। पुराणं पञ्चलक्षणं वायवीयादि। तत्र कुशलो निपुणस्तदर्थाभिज्ञः। तदपेक्षः तन्मननशीलः। तद्वृत्तिः तदुक्तानुष्ठाता।

५। अष्टाचत्वेति। ते च गौतमेनोक्ताः। गर्भाधानपुंसवन-सीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचूडोपनयनम्। अत्र समाहारद्वन्द्वः। चत्वारि वेदव्रतानि प्रतिशाखं गृह्योक्तानि। स्नानं समावर्त्तनाख्यम्। विवाहाख्यः सहधर्मचारिणीसंयोगः।

पञ्चानां यज्ञानामनुष्ठानम्। देवपितृमनुष्यभूतब्रह्मणामिति। एते पञ्च पृथक् संस्कारा न तु समुदायः।

६। एतेषां च वक्ष्यमाणानामनुष्ठानम्। अष्टका श्राद्धम्। पर्वणि भवः पार्वणः स्थालीपाकः। श्राद्धम् अमावास्यादि। श्रावणी तत्र कर्त्तव्यं श्रवणाकर्म। आग्रहायणी तत्र कर्त्तव्यं हैमन्तप्रत्यवरोहणम्। चैत्री तत्र कर्त्तव्यः ऐन्द्राग्न इत्याद्युक्तस्तुन्दिलः शूलगवश्च। आश्वयुजी तत्र कर्त्तव्यमाश्वयुजीकर्म पृषातकचरुरूपम् पशुपतये स्थालीपाकरूपम्, अनाहिताग्नेराग्रयणं चेति द्वयमाश्वयुजीशब्दग्राह्यमिति हरदत्तः। इति सप्त पाकयज्ञसंस्थाः। पाकयज्ञा अल्पयज्ञाः प्रशस्तयज्ञा वा। तं पाकेन मनसा, यो मा पाकेन मनसेत्यादौ पाकशब्दप्रयोगस्य प्रशंसायां दर्शनात् इति वृत्तिकृन्नारायण हरदत्तादयः। आख्या चेयं गार्ह्याणां कर्मणामिति हरदत्तः।

Digitized by Google

तथा आपस्तम्बः, लौकिकानां पाकयज्ञशब्द इति। संस्था विधा। पाकयज्ञविधाः सप्तेत्यर्थ इति हरदत्तः।

७। अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः। एते ऽग्न्याधेयादयः श्रुतिप्रसिद्धाः। दर्शपूर्णमासाविति समुदाय एकः संस्कारः सप्तग्रहणात्। सोमसम्बन्धाभावादेते हविर्यज्ञाः।

८। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त सोमसंस्थाः। अग्निष्टोमे यत्र राजन्यस्य षोडशि-ग्रहो गृह्यते सो ऽत्यग्निष्टोमः। ब्राह्मणस्य कथमयं संस्कार इति चिन्त्यमिति हरदत्तः। एते चाधानादयो गृहस्थस्य नित्या इत्याद्यन्यत्र स्पष्टमिति। एते चत्वारिंशत् संस्काराः।

९। संस्कारो द्विविधः ब्राह्मो दैवश्च। तत्र गर्भाधानादि-स्नानान्तो ब्राह्मः। अग्रिमो दैवः। अष्टौ चात्मगुणा इति चात्मसंस्कारा इत्यथानुषङ्गः। आत्माऽत्र चित्तं तच्छुद्धावेवैते भवन्ति नान्यथेति भेदेनोक्तिः तथा चोपनयनाद्यधिकारसम्पत्तिरिति भावः। पाकयज्ञादीनां संस्कारत्वं च शङ्खलिखिताभ्यामुक्तम्।

पाकयज्ञा हविर्यज्ञाः सोमसंस्थास्तथैव च।
संस्कारास्त्वग्निहोत्रान्ता अग्निहोत्रं तु जुह्वतः॥
संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः।
नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्रह्मलौकिकः॥
ब्राह्मम्पदमवाप्नोति तस्मान्न च्यवते पुनः। इति।

ब्रह्मलौकिको ब्रह्मलोकार्हः।

Digitized by Google

१० । अष्टगुणाश्च, सर्वभूतदया क्षान्तिरनसूया शौचमनायासो मङ्गल्यमकार्पण्यमस्पृहेति । शौचं बाह्यमाभ्यन्तरञ्च । अनायासः क्लेशकरकर्मानारम्भः । दूर्वागोरोचनाहिचन्दनं मङ्गल्यम् । अकार्पण्यं संविभागशीलत्वम् । अस्पृहा परद्रव्यानिच्छा । एवमष्टाचत्वारिंशत्संस्काराः तैः संस्कृत इत्यर्थः ।

११ । त्रिषु । अध्ययनेज्यादानेषु अदृष्टार्थेषु अभिरतस्तदर्थानुष्ठानपरः । एवमग्रेऽपि । षट्सु अध्यापनयाजनप्रतिग्रहरूपदृष्टार्थसहितेषु वेति पूर्वान्वयि ।

१२ । सामयिकेति । पौरुषेयी व्यवस्था समयः । स च त्रिविधः, विधिर्नियमः प्रतिषेधश्च । तन्मूला आचाराः समयाचारास्तेषु भवा धर्माः सामयाचारिकास्तेषु कुशल इत्यर्थः । यद्वा शास्त्रविदुक्ता मर्यादा वर्णाश्रमिणां पाषण्डानां च समयः, शिष्टानुष्ठित आचार इत्यर्थः ॥ ४ ॥

१ । व्यवहारविषयमिति । प्रत्यर्थ्यादिप्रतिकूलतया नृपादिषु कथनं व्यवहार इत्युक्तमतः कथ्यमानं तद्विषयकमित्यर्थः । व्यपेतेन रहितेन । राज्ञ इति । इदं तदधिकृतादेरप्युपलक्षणम् । स्मृत्येत्यस्यार्थमाह । धर्मेति । तदो ऽध्याहारः । यदिति । उपलक्षणत्वादेवाह । प्राडिति । चेदर्थो यदीति । पक्षे हिर्निश्चये । व्यवहारपदमित्यस्यार्थमाह । प्रतिज्ञोत्तरेति । एतत्पञ्चात्मक इत्यर्थः । तस्य विषयस्य ।

२ । अत एव तस्य विषयस्य द्वैविध्यमाह । स चेति । शङ्केति । शङ्कारूपो ऽभियोगो यस्मिन् विषये तत्त्वरूपो ऽभियोगो यस्मि-

Digitized by Google

न्विषये इत्यर्थः। अभियोग इति सुजर्थान्तर्भावेण बहुव्रीहिः। विषयो ऽन्यपदार्थः। तदेव विशिष्याह। शङ्केति। असतान्त्विति। असतां चौरादीनां संसर्गाच्चौरत्वादिसम्भावना भवतीत्यर्थः। होढा लोप्त्रमिति। लुप्यते इति लोप्त्रम् उणादिः। चौर्यधनम्।

चौरिकास्तैन्यचौर्ये च स्तेयं लोप्त्रं तु तद्धनम्।

इत्यमरः। लिङ्गमिति। अव्यभिचरितं चिन्हमित्यर्थः। इदमुपलक्षणमित्याह। साक्षाद्वा दर्शनमिति। अपहरतीति चेति। वापाठेऽपि समुच्चये।

३। विषयस्य भेदान्तरमाह। पुनश्चेति। द्यूतमाह्वय इति। द्यूतस्यैवोपाधिभेदेन भेद आह्वयाख्यः। पुनर्भेदमाह। एतान्यपीति। साध्येति। अवान्तरसाध्यभेदेनेत्यर्थः। एषाम् ऋणादानादीनाम्। तस्य पुनर्भेदान्तरमाह। क्रियेति। क्रिया साध्यम्। शतशब्दो ऽनन्तवचनः। चेदित्यतःसूचितमाह। चेदिति। अन्यथा तत्प्रेरणोल्लङ्घने दण्डापत्त्या चेदित्यस्यैच्छिकावेदनबोधकस्यासङ्गतिः स्पष्टैव। अस्य राज्ञः। न च प्रापितमिति। कथञ्चन अन्यायेनान्येन प्रापितमर्थं न गृह्णीयादित्यर्थः। यद्वा अन्येन प्रापितं निवेदितं अर्थम् कार्यं कथञ्चन अविचार्य न ग्रसेत नोपेक्षेतेत्यर्थः। न चाप्रापितमिति पाठे तु अन्येन विवदमानेन तत्सम्बन्धिना वा अप्रापितमनिवेदितं कथञ्चिदवगम्य रागादिना न ग्रसेत न ग्राहयेदित्यर्थः।

४। मूले परैरित्यत्र "स्वरितात्संहितायामनुदात्तानाम्" इति-सूत्रभाष्योक्तरीत्या परस्य परौ च परे चेत्येकशेष इत्याशयेनाह।

Digitized by Google

**परैरितीति**। परेणेत्याद्यर्थकं परैरिति बहुवचनान्तं पदमिति दर्शयतीत्यर्थः। बहुवचनाविवक्षया योजनं तु परेणेत्यादिग्रन्थ-स्वरसविरुद्धम्। एकस्येत्यस्य सर्वत्रान्वयः।

५। एवं सति प्राप्तविरोधं परिहरति। **यत् पुनरिति**। यत्त्वित्यर्थः। **न्यायेति**। **धर्मेति** पाठान्तरम्। **तद्भिन्नेति**। पृथग्व्यवहारविषयमित्यर्थः। यद्येकेनैको ऽभियुक्तो मह्यमसौ धारयतीति, तदा तस्मिन्व्यवहारे ऽनिष्पन्ने ऽन्येनान्येन चान्यथा नाभियोक्तव्यः। निष्पन्ने तु क्रमेण तथैवमेकस्य बहुभिर्विवादा-भावो न लेते मह्यं धारयन्ति शतमित्येवमेकस्य बहुभिर्विवादाभाव इति भावः। इदं च मत्तोन्मत्तेति व्याख्यानावसरे सबीजं सकलै-तत्पद्यव्याख्यानं स्फुटीभविष्यति।

६। न्यूनतां परिहरति। **आवेद्येति**। तृतीयान्तस्यार्थसिद्ध-मित्यत्रान्वयः। द्वितीयमाह। **आवेदितं चेति**। तृतीयमाह। **अकल्येति**। आधिव्याधिसहितादीनामित्यर्थः। **अर्थसिद्धमिति**। अन्यथा ऽविनीतस्यावेदनमेव न घटेत उद्धतत्वेन राजसमीपे गन्तुमशक्यत्वात्। आवेदनानन्तरं च तस्य युक्तत्वेऽपि यदि प्रत्यर्थिनो नाह्वानं तर्ह्यावेदनमेव निष्फलमिति न कोऽप्यावेदयेत्। तथा च प्रजापरिपालनस्यैवासिद्धिरिति तेषामर्थसिद्धत्वमित्यर्थः।

७। इदं प्रमाणयति। **स्मृत्यन्तरे त्विति**। **नारदीये** त्वित्यर्थः। **किं कार्यं का चेति**। अर्थकृतो मन्युकृतश्च प्रश्नभेदः। केन कर्त्रा कस्मिन् देशे कदा काले कस्मात्कारणात्। तयोर्भेदस्योक्त-त्वादाह। **ससभ्यैर्ब्राह्मणैरिति**। मुद्राग्रहणं लेख्यस्याप्युपलक्षणम्।

Digitized by Google

८। एवं प्रत्यर्थिन आह्वाने निषेधमाह। अकल्पेत्यादि। अकल्यः व्याध्याद्यभिभूतः। विषमस्थः उत्पन्नसङ्कटः। क्रिया-ऽऽकुलः नित्यनैमित्तिकादिक्रियाव्यग्रः। कार्यातिपातीति यस्यागच्छतो गुरुतरकार्यहानिः सः। व्यसनी इष्टवियोगादि-दुःखवान्। द्वन्द्वान्ताकुलशब्दस्य प्रत्येकं सम्बन्धात् नृपकार्यासक्तः उत्सवासक्तः। मत्तो मादकद्रव्येण। उन्मत्तः उन्मादेन पञ्चविधेन वातपित्तश्लेष्मसन्निपातग्रहसम्भवेनोपसृष्टः। प्रमत्तः सर्वदा ऽवधान-हीनः। आर्त्तो विपदादिना पीडितः।

९। स्त्रीणां तन्निषेधमाह। न हीनेति। अनाथां सर्वजन-शोच्यामिति यावत्। सर्वेति। ब्राह्मणीम्। तत्र हेतुमाह। ता इति। ताः हीनपद्याद्यः ज्ञातिस्वामिका इत्यर्थः।

१०। एवं स्त्रीणामाह्वाने निषिद्धे प्रतिप्रसवमाह। तदधी-नेति। तस्या अधीनं तादृशं यत्कुटुम्बं तद्यासामस्तीति इनिः। *एकदेशीतिवत्प्रयोगः। स्वैरिण्यो व्यभिचाररताः। गणिकाः वेश्याः। निष्कुला हीनकुलाः।

११। एतत्प्रसङ्गादकल्याद्याह्वाने पूर्वनिषिद्धेऽपि प्रतिप्रसवमाह। कालमिति। तत्र प्रकारद्वयं शनैर्यानैरिति।

१२। एतत्प्रसङ्गादाह। ज्ञात्वेति। क्षुद्रकार्येषु तथा नेत्याह। गुर्विति। वेषमाहात्म्यात्तत्रापि विशेषमाह। अकोपेति।

---

* ननु न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति निषेधात्कथमत्र कर्मधारयादिनिप्रत्यय इत्याशङ्क्याह। एकदेशीति। तथाचायंवान् एकदेशीत्यादिभाष्याद्युदाहरणेषु कर्मधारयादपि तद्दर्शनात् अपाणिनीयस्य पूर्वोक्तवचनस्य क्वाचित्कत्वमिति भावः।

Digitized by Google

१३। *इत्यादीत्यादिपदग्राह्यमेवाह। **आसेधेति**। निरोधे-त्यर्थः। **आसेधयेदिति**। **विवादार्थी** वादी आह्वानदर्शनपर्यन्तं तादृशं प्रत्यर्थिनं निरोधयेदित्यर्थः।

१४। तच्चातुर्विध्यमाह। **स्थानेति**। कृतः आसेधः। (तद्विषयत्वात्तत्कृतत्वम् एवमग्रेऽपि) अग्रे उभयत्र कृत इति शेषः। **आसेध इति** प्रकृते अस्मात्प्रदेशान्न गन्तव्यमिति **स्थानासेधः**। आसन्ध्यं न गन्तव्यमिति **कालासेधः**। देशान्तरं प्रति न गन्तव्यमिति **प्रवासासेधः**। असौ व्यापारो न कर्त्तव्य इति **कर्मासेधः**। **आसिद्धः** निरुद्धः। **तम्** आसेधम्। **विनेयः** शिक्षणीयः। **अन्यथा कुर्वन्निति** अनासेधकाले आसेधं कुर्वन्नासेधकर्ता दण्ड्यो भवेदित्यर्थः। यद्वा आसेद्धा आसिद्धं तं लोभादिना मुञ्चन्नित्याद्यर्थः।

१५। नासिद्धस्तं विलङ्घयेदित्यस्य प्रतिप्रसवमाह। **नदीति**। नदीसन्तारादिनिमित्तचतुष्टयम्। तदतिक्रमणे दोषाभावमन्यत्राप्याह। **निर्वेष्टुकाम इति**। आश्रमान्तरं गन्तुकामः विवाहादावुद्यत इति यावत्। **यियक्षुर्यष्टुमिच्छुः**। **तत्कालं** शिल्पकाले। **आयुधीयाः** आयुधजीविनो योद्धारः। **विग्रहे** संग्रामे। निर्वेष्टुकामादयोऽपि तदुल्लङ्घनेनापराधिनो नेत्यर्थः। सामान्यनिरोधस्यातत्त्वादाह। **राजेति**।

१६। ननु येषामकल्पादीनां शनैर्यानैरपि आगमनं दुर्घटं तत्र किं

---

* इत्याद्यर्थसिद्धमित्यत्रत्यादिपदग्राह्यमित्यर्थः।



Digitized by Google

कार्यमत आह। अकल्यादय इति। ते पुत्रादयः। नियोगकृत् आज्ञाकारी। एतदन्यः परार्थवादी। स व्यवहारेषु विरुद्धं विविधं विशेषेण वा ब्रुवन् दण्ड्य इत्यर्थः॥ ५॥

१। अर्थशब्दस्याभिधेयपरत्वनिरासद्वारा प्रयोजनपरत्वमाह। अर्थ्यते इति। भूतनिष्ठात्वभ्रमर्थमाह। पूर्वमावेदनेति। क्रिया कार्यम्। नोपस्थाता समीपे न तिष्ठन्। प्रपलायी प्रपलायनं प्रपलायः सो ऽस्यास्तीति प्रपलायी। स्मृत इतीति। वचनादिति शेषः। इतिशब्दो हेत्वर्थो वा। अतो हेतोरित्यर्थः।

२। पूर्वावतारितैतद्वचनोत्तरार्द्धमेव शङ्कान्तरनिरासपरमित्याशयेन शङ्कते। आवेदनेति। समाशब्दार्थः संवत्सरेति। तदर्धशब्दार्थः पक्षेति। अहर्ग्रहणमुपलक्षणमित्याह। तिथीति। प्रतिपदादिरित्यर्थः। अहःपदार्थो दिनेति। न तु रात्रिरित्यर्थः। नाम: साकाङ्क्षत्वेन प्रकृतत्वादाह। अर्थीति। वेलेति। दिनमध्ये ऽपि प्रातरादिर्मुहूर्त्तरूपो वा कालविशेष इत्यर्थः।

३। क्षमेति। प्रत्यर्थिविषये आसेधाद्यकरणं क्षमा सहिष्णुता तत्र यानि लिङ्गानि कारणानि बाल्यजडत्वादीनीत्यर्थः।

४। तत्र मानमाह। यथोक्तमिति। तथोक्तमिति पाठान्तरम्। नारदेनेत्यर्थः। अर्थवत् प्रयोजनवत्। धर्मसंयुक्तं धर्मो गुणः अल्पाक्षरत्वप्रभूतार्थवत्त्वादिकस्तेन संयुक्तम्। परिपूर्णमध्याहारानपेक्षम्। अनाकुलमसन्दिग्धाक्षरम्। साध्यवत् सिषाधयिषितार्थसहितम्। वाचकपदं बहुव्रीहिः गौणलाक्षणिकादिपदरहितम्। प्रकृतार्थानुबन्धि पूर्वावेदितार्थानुरोधि। प्रसिद्धं

Digitized by Google

लोकप्रसिद्धवस्तुविषयम् । अविरुद्धं पुरराज्ञायविरुद्धं पूर्वापराविरुद्धं प्रत्यक्षादिप्रमाणाविरुद्धं व्यावहारिकधर्माविरुद्धं च । निश्चितं अर्थान्तरसंशयरहितम् । साधनक्षमं साधनार्हम् । संक्षिप्तं अनतिविस्तृतम् । निखिलार्थम् अनवशेषितवक्तव्यम् । देशकालाविरोधि मध्यदेशीयक्रमुकक्षेत्रं शरत्कालीनाम्रफलसहस्रं मदीयमपहृतमित्येवमादिशून्यम् । वर्षेत्याद्येकपदम् । प्रदेशपदान्तद्वन्द्वात्मतुप् । अहः प्रतिपदादिर्वारो दिनं च । वेला प्रातरादिर्मुहूर्त्तरूपा च । देशो मध्यदेशादिः । प्रदेशः क्षेत्रादेः स्थलविशेषः । स्थानेत्याद्यपि एकं पदम् । वयःशब्दान्तद्वन्द्वस्य तृतीयातत्पुरुषः । स्थानं वाराणस्यादि । आवसथो ग्रामादिः । हट्टादिरूपस्थलविशेषो वा । साध्याख्या विवादास्पदीभूतवस्तुनाम । जातिः ब्राह्मणत्वादिः । आकारो गवाश्वादिगतो वर्णादिविशेषः गृहक्षेत्रादेः संस्थानविशेषश्च । वयः गवादेर्वयःपरिमाणं बाल्याद्यवस्थाविशेषः । साध्यप्रमाणसंख्यावत् . प्राग्वत् । साध्यस्य प्रमाणं क्षेत्रादेर्निवर्त्तनादिकम् संख्या रूपकादीनाम् । आत्मप्रत्यर्थिनामवत् स्पष्टम् । परेति प्राग्वत् । परः प्रतिवादी आत्मा वादी तयोर्ये पूर्वजाः पित्रादयस्ते चानेकराजास्थानेके राजानो शुक्लिकालिकास्तेषां नामभिश्चिह्नितम् । क्षमालिङ्गात्मपीडावत् क्षमालिङ्गानि व्याख्यातानि आत्मपीडा स्वदुःखं तद्वत् । कथितेति, प्रतिपत्त्यादिना ऽधिगन्ता आहर्त्ता दाता दायकः, कथितौ आहर्तृदायकौ यस्मिन्वचने तत् कथितप्रत्यर्थिसम्बन्धकमिति वा । एतादृशं यच्छास्त्रे कथ्यते तदित्याद्यर्थः ।

५। भाषापदार्थमाह। भाषाप्रतीति। उत्तरार्द्धतात्पर्यमाह। आवेदनेति। मात्रपदेन वर्णादिव्यवच्छेदः। अत एवाह। समेति। एतद्व्यवस्थामाह। संवत्सरेत्यादिना। संवत्सररूप-विशेषणमित्यर्थः। आधाविति। तत्र पूर्वत्वादिज्ञानाय तदावश्य-कत्वमिति भावः। इदमग्रे स्फुटीभविष्यत्यसाधारणव्यवहारमातृका-प्रकरणे। अन्यत्रापि तस्य फलमाह। अर्थव्यवहारेऽपीति। उपयुज्यते इत्यत्रान्वयः। द्रव्यस्वामी आह। वत्सरान्तरे इति। इति एवमर्थम्। एवं संवत्सरविशेषणवत्।

६। पुनस्तर्थे। तत्रैव वाराणस्यादावेव निविष्टः निष्पादितः। संज्ञा चेति। अर्थिप्रत्यर्थिनोरेवेति भावः। अधिवसतीत्यधि-वासः बाहुलकात्कर्तरि घञ् अर्शआद्यजन्तं वा। अधिः समीपे इत्याह। समीपेति। तन्नामान्तरमाह। कृष्णभूम इति। कृष्णोदक्पाण्डुत्यच्प्रत्ययो बहुव्रीहेः। पित्रिति लुप्तषष्ठ्यन्त-मित्याह। पितुरिति। एवमेव तत्र पाठो वा। नामेत्यस्य सम्बन्धः। पित्रादेः साकाङ्क्षत्वादाह। अर्थेति। गुणानुकीर्त्त-नानुपयोगात्प्रकृतत्वाच्चाह। नामेति। इतिरर्थसमाप्तौ। अनु-गतफलितमाह। समेति। निर्धारणे षष्ठी। एवम् अर्थवदित्या-दिना उक्तप्रकारेण।

७। उक्तमिति। पक्षाभासलक्षणमित्यर्थः। निराबाधमिति। स्वपीडारहितमित्यर्थः। तदाह। असमदिति। निष्फलत्वस्य पृथगुक्तत्वादाह। अभिधेयेति तत्र मानुषप्रमाणासम्भवमादा-वाह। अल्पेति। अयमुभयत्र हेतुः। भुक्तेस्तु सम्भव एव नेति

भावः । अत एव दिव्याभावमाह । अल्पेति । विनिगमनाभावा-
दाह । पुरेति ।

८ । तत्राद्ये स्पष्टत्वात् द्वितीये मानमाह । रामेति । यत्पदार्थो
व्यवहारः । प्रकृतीनां जनानां नगरस्थानाम् । उपसंहरति ।
अन्ये इति । इतीति, प्राग्वत् व्याख्येयम् ।

९ । अप्रसिद्धादीनां पक्षाभासत्वमिवानेकपदसङ्कीर्णपूर्वपक्षस्यापि
तत्त्वमेव । अनेकैः पदैः सङ्कीर्णो यः पूर्वपक्षः प्रतिज्ञा सा न सिध्यति
आभासरूपा भवतीति तदर्थप्रतीतेस्तन्निराकरोति । यस्त्वित्या-
दिना । तत्र पदशब्दः पद्यते ज्ञायते इति व्युत्पत्त्या किं वस्तुपरः
उत ऋणादानादिरूपव्यवहारविषयपरः । तत्र न तावदाद्ये
पक्षाभासत्वमित्याह । तत्रेति । उक्तवचने इत्यर्थः । द्वितीयेऽपि
तदभावमाह । ऋणादानादीति । निक्षिप्तं मयेति शेषः ।
यत इति शेषोऽत्र बोध्यः । वचनानर्थक्यपरिहाराय तस्याभि-
मतार्थमाह । किं त्विति । क्रियेति । साध्येत्यर्थः । एतावत्
तत्रोच्यते इति शेषः ।

१० । अत्र मानमाह । यथाहेति । बहुप्रतिज्ञं बहुपूर्व-
पक्षकम् । अन्यथैतस्य वैयर्थ्यं स्पष्टमेव । तस्मादुक्तैव वचनयोर्व्यवस्था ।
तदेव दृढयन्नुपसंहारव्याजेनाह । तस्मादिति । तस्यार्थ इति ।
उक्तवचनस्यार्थ इत्यर्थः ।

११ । यथावेदितमर्थिनेत्यत्रार्थिपदस्वारस्येन लब्धमर्थमाह ।
अर्थीति । अर्थिनः पुत्रोऽप्यर्थी तत्पिताऽप्यर्थी आदिशब्दादर्थि-
नियुक्तादयोऽप्यर्थिन इत्यर्थः । अत एव तेषामन्यथावादित्वं निरस्तं

Digitized by Google

प्राक् "थो न भाते" त्यनेन वचनेन। ननु तत्पुत्रादेस्तदेकार्थत्वात्तत्वं युक्तं तन्नियुक्तस्य तु तदभावात्कथं तत्त्वमत आह। **नियुक्तस्यापीति।** तत्र मानमाह। **अर्थिनेति।** तस्येति वाच्ये तयोरित्यस्य तात्पर्यार्थमाह। **नियुक्तेति।**

१२। मूलानुक्तं विशेषमाह। **एतच्चेति।** अर्थिवेदितमित्यर्थः। **पाण्डुलेखेति।** खडीति भाषाप्रसिद्धः। **आवापेति।** न्यूनाधिक्यपरिहाराय। प्रक्षेपनिष्कासनाभ्यामित्यर्थः। युक्तं चैतत्। अन्यथा पत्राप्रामाण्यप्रसङ्गापत्तेः। तत्र मानमाह। **पूर्वेति।** स्वभावेनोक्तं न तु छलादिना। **ततः** तदनन्तरम्। **तथा** विशोधितं पत्रे ऽभिलेखयेदित्यर्थः। शोधने विशेषमाह। **शोधनमिति। अवेति।** उत्तरेणावष्टब्धस्य प्रतिबद्धस्य पूर्ववादस्य शोधनं निवृत्तं भवेदित्यर्थः। **शोधयेदिति** विधिसूचितमर्थमाह। **पूर्वपक्षमिति। रागादिति** प्रागुक्तमिदम्। इतीत्यस्य बोध्यमिति शेषः॥ ६॥

१। प्रत्यर्थिनो वचनस्य उत्तरत्वे बीजमाह। **पूर्वेति। उत्तरञ्च** अग्रे। तदीययथाकथञ्चिद्वचनस्यानुत्तरत्वाय विशेषमाह। **उत्तरं चेति। तद्विदः** व्यवहारविदः। **सारमित्यस्यार्थो** न्याय्यम्। तदर्थो **न्यायादिति।** तृतीयान्तानां त्रयाणां यद्वाक्येयार्थमित्यत्रान्वयः। **दुःश्लिष्टेति।** अश्लिष्टेति पाठान्तरम्। **श्लिष्टं** सम्बन्धयुक्तम् अदुष्टमिति यावत्। न श्लिष्टमश्लिष्टं असम्बद्धं दुष्टमिति यावत्। विभक्तिश्च समासश्च विभक्तिसमासौ अश्लिष्टौ दुष्टौ च यौ विभक्तिसमासौ च तौ, अध्याहारेण सह वर्त्तत इति साध्याहारं,

Digitized by Google

तौ च तच्च तानि। तैरभिधानं तेनेत्यर्थः। दुःश्लिष्टेति पाठेऽप्येवम्। दुःश्लिष्टौ दुःखेन सम्बद्धौ यौ तौ ताभ्यामित्यर्थाद् दुष्टत्वे पर्यवसानात्। अदेशेति। अन्यदेशेति पाठान्तरम्। उत्तरपदार्थमाह। **तत्सदुत्तरमिति।**

२। **प्रत्यवेति।** कारणोत्तरमित्यर्थः। **मह्यमिति।** धारेरुत्तमर्ण इति सम्प्रदानत्वम्। **सत्येति।** सत्यलोक्तिरित्यर्थः। **प्रतिपत्तिरिति।** प्रतिपत्तिः सम्प्रतिपत्तिः सत्योत्तरमित्यनर्थान्तरम्। **नाहमिति** वाद्युक्तिः पूर्ववत्। एवमग्रेऽपि।

३। द्वितीयभेदानाह। **तच्चेति। मिथ्यैतत्** नाहं धारयामीत्येकं, **नाभिजानामि** नैव जानामीति द्वितीयम्। **तदेति।** तस्मिन्काले तस्मिन्देशे मम सान्निध्यमेव न स्थितमिति तृतीयम्। **अजात इति।** तत्काले ममोत्पत्तिरेव न स्थितेति चतुर्थम्। एवं प्रकारेण मिथ्योत्तरं चतुर्विधमित्यर्थः। अत्र स्पष्टत्वात्स्मृतिरेवोक्ता पृथक् सङ्कीर्त्तनं न कृतमिति बोध्यम्।

४। **नाम** त्वर्थे। विनिगमनाविरहादाह। **प्रतिग्रहेणेति।** लेखितः पत्रस्य रूपम्। प्रत्यर्थी यदि तं पश्चाल्लेखीकृतमर्थं तथा प्रपद्य तथैवाङ्गीकृत्येत्याद्यर्थः। **आचारेणेति।** व्यवहारेण पराजितोऽपीत्यर्थः। जितः पूर्वमित्येवं स वाच्य इत्यर्थः। सः तथोक्तिरूपः।

५। प्रत्यन्तरमाह। **यद्यस्तमिति।** तच्च एकादशानां मध्ये। **पञ्चाशतमिति।** अर्द्धन्यूनतया ऽत्यल्पत्वम्। अत एव द्वैगुण्येनातिभूरित्वमाह। **द्विशतमिति।** समाहारे द्विगुः। पात्रादि-

त्वात्स्त्रीत्वाभावः। **पक्षैकेति।** श्लोके तथाशब्दस्यार्थे। **अन्यत्** पक्षैकदेशव्यापि चेत्यर्थः। पक्षैकदेशनिराकरणसमर्थेत्यर्थः। **व्यस्तेति।** असम्बद्धपदकमित्यर्थः। पक्षैकदेशव्यापिनो ऽनुत्तरत्वे सकलपक्षा-व्यापिनो ऽनुत्तरत्वमर्थसिद्धमेवेत्यव्यापीत्यन्यथा व्याचष्टे। **देशेति। मध्येति।** विन्ध्यहिमाचलयोर्मध्येत्यर्थः। **लिखिते इति।** अन्त-र्भावितण्यर्थमिदम्। गुह्यार्थमाह। **अत्रेति। ध्वनिना** किमा-दिबोध्येन। तथाकुलमिति पाठो न तु निराकुलमित्यभिप्रेत्याह। **आकुलमिति। दुःश्लिष्टेति** शाम्वत्। उभयोरुदाहरणमाह। **पित्रेति।** पितुर्यं ऋणाभियोगस्तत्रेत्यर्थः। उत्तरमाह। **गृही-तेत्यादि इतीत्यन्तेन।** अस्य तात्पर्यार्थमाह। **अत्रेति। गृहीतेति।** बहुव्रीहिः। तथा च गृहीतशतवचनादित्यत्र दुःश्लिष्टः समासः। सुवर्णानामित्यत्र शतं गृहीतमित्यस्याध्याहार इत्युभयोरेक-मेवोदाहरणम्। **इतीत्यस्य** विवक्षितमिति शेषः। **गृहीतमिति।** तत्रेति शेषः। ईदृशं यदुत्तरं तत् स्वार्थसिद्धये नेति द्वितीयश्लोकार्थः। तथा च तस्य सदुत्तरत्वमेव नेति पूर्वश्लोकैकवाक्यतेति बोध्यम्।

६। अभिमतार्थसूचकतया न न्यूनतेत्याह। **उत्तरमिति।** श्रुतार्थस्योत्तरं लेख्यमित्यत्र तथा निर्देशात्सङ्कीर्णोत्तरस्यानुत्तरत्व-मित्यर्थः। ननु त्रिभिर्मिलित्वा पक्षस्य निराकरणेन तत्समर्थ-त्वात्कुतो ऽनुत्तरत्वमत आह। **अनुत्तरत्वेति। तेनैव** कात्यायनेनैव। **न चेति।** न हीत्यर्थः। **स्यादिति** सम्भावनायां लिङ्। **वादिनोः** अर्थिप्रत्यर्थिनोः। एकत्र अन्यतरस्मिन् सम्भव-तीति शेषः। सङ्करस्यानेकविधत्वादादौ द्वयोः सङ्करे आद्योदा-

Digitized by Google

हरणमाह । **मिथ्येति** । वादिनोरित्यस्यार्थमाह । **अर्थीति** । न वादिद्वयपरत्वमिति सूचयितुं **मिथ्येति** । अव्ययमिदं, मिथ्योत्तरे इत्यर्थः । **पूर्ववादे** कर्मण्यण्, वादिनीत्यर्थः । **कारणे** कारणोत्तरे । **विरुद्धमिति** । तथा च कर्त्तुमशक्यत्वादुभयोर्नार्थसिद्धिरिति भावः । न चार्थेति चोक्त एवेत्यर्थं । न चैकचेत्यस्य तथैवोदाहरणमाह । **कारणेति** । तयोर्मिथः सङ्करे त्वित्यर्थः । एवेमार्थिव्यवच्छेदः । **प्राङ्न्यायेति** । तयोरुक्तावित्यर्थः । नेदं प्रत्येकपरम् । कारणांशे "कारणे प्रतिवादिनी"ति सिद्धत्वात् । तस्मात्तत्सांकर्य्यपरमेवेदम् । अत एव समासनिर्देशसङ्गतिरपि । द्वितिः प्राग्वत् । नन्वेकस्यैव क्रिया न द्वयोरिति न प्राग्वद्विरोधो ऽत आह । **अत्र चेति** । द्वितीयसङ्करे त्वित्यर्थः । **भावेति** । साधयितव्यमेतैः कृत्वेत्यर्थः । आदिना दिव्यपरिग्रहः । **उत्तरत्रयेति** । मिथ्याकारणप्राङ्न्यायरूपेत्यर्थः । **एवं चतुरिति** । यथा अनेन सुवर्णं रूपकशतं वस्त्राणि धान्यं च गृहीतमित्यभियोगे सुवर्णं धारयामि रूपकशतं न गृहीतं वस्त्राणि प्रतिग्रहेण लब्धानि धान्यविषये पूर्वन्यायेन पराजित इति । एवं मिथ्याप्राङ्न्यायमात्रसङ्करे ऽपि द्रष्टव्यम् ।

७। नन्वत्र सर्वत्र क्रमेण क्रियाद्वयस्य सुकरत्वात्कात्यायनोक्तमसम्भवरूपं तत्कारणकथनमयुक्तमतस्तदाशयमाह। **एतेषां चेति** । असिद्धेरिति च्छेदः । अत एवैतत्फलितमाह । **क्रमेणेति** । क्रमेण त्वित्यर्थः । तच्च नियामकाभावादाह । **क्रमश्चेति** । चेन प्राड्विवाकादेः समुच्चयः । एवं प्राप्ते क्वचिन्नियामकमाह । **यत्रेति** । यत्र



Digitized by Google

त्वित्यर्थः। उभयोरिति। मिथ्याकारणोत्तरयोरित्यर्थः। इत्युप-
लक्षणं आदेरपि। यस्य उत्तरस्य। तत्क्रियोपेतेति। तत्साधक-
क्रियाग्रहणेनेत्यर्थः। पश्चादिति। अल्पविषयकोत्तरसाधकक्रिया-
ग्रहणेनेत्यर्थः। सत्योत्तरसङ्करस्य पूर्वमनुपन्यासे बीजं ध्वनयन् तत्र
नियामकान्तरमाह। यत्र चेति। फलाभावेन पश्चादपि तद-
भावाद्च पूर्वमिति नोक्तम्। तदाह। सम्प्रेति। उक्तनियामकत्वे
मानमाह। यथेति। उक्तमित्यन्वयः। द्वितीयमाह। सत्यं
वापीति। यद् उत्तरम्। द्वितीये आह। यत्र चेति। उत्तरे
इत्यर्थः। तच्च तदुत्तरमसङ्कीर्णं ज्ञेयमित्यर्थः। अतोऽन्यथेति।
यत्प्रभूतार्थविषयकमुत्तरं न भवति अपि तु समार्थविषयकं, यत्र
चोत्तरे क्रियाफलमुभयत्र भवति तत्। अतः पूर्वोक्तात्। अन्यथा
प्रकारान्तरमित्यर्थः। तत्त्वमेव कथयन् तदर्थमाह। सङ्कीर्णमिति।
वाक्यपूर्त्तये आह। भवतीति शेष इति। अत्रापि सङ्कीर्ण-
त्वादनुत्तरत्वमेव सर्वथा नाभिमतं किं तु यौगपद्येन तत्त्वम्।
अर्थादीच्छाक्रमेण तु तत्त्वमेवेति प्रागुक्तमेवाह। ऐच्छिकक्रम-
मिति। तदर्थमाह। अपेक्षाक्रममिति। अर्थ्याद्यपेक्षाक्रमकं
भवतीत्यर्थः। पुल्लिङ्गपाठे तत्पुरुषः। तत्रेति शेषः। तत्र तयोर्मध्ये।
द्वितीयोदाहरणमाह। तर्थेति। तस्मिन्नेवेति। अनेन सुवर्णं
रूपकशतं वस्त्राणि च गृहीतानीति पूर्वोक्ते एवाभियोगे इत्यर्थः।
तानीति शेषः। दास्यामीत्यस्य इत्युत्तरस्येति शेषः। इति
चोत्तरे इत्यन्यतमोत्तरेण साङ्कर्यं। तथा चात्र दास्यामीत्यन्तस्य
सत्योत्तरस्य यथाक्रमं मिथ्योत्तरेण कारणोत्तरेण प्राङ्न्यायोत्तरेण

च सङ्करो बोध्यः। सङ्कीर्णोत्तरे विषयसाम्ये ऐच्छिकः क्रमस्तद्वैषम्ये-ऽप्यधिकविषयोपादानेन प्राग्व्यवहार इत्युक्तम्। तत्र द्वितीयस्यापवादमपि प्रसङ्गात्सूचयन् प्रकृतमाह। सम्प्रेति। एतदर्थमेव तस्मिन्नेवाभियोगे इत्युक्तम्। अन्यथाऽभियोगान्तरमेव वदेत्। मिथ्यायुत्तरेति। मिथ्याद्यन्यतमोत्तरेत्यर्थः।

८। एवं तादृशसङ्कीर्णोत्तरस्य यौगपद्येन सर्वथाऽनुत्तरत्वे प्राप्ते क्वचित्प्रतिप्रसवमाह। यत्र त्विति। शृङ्ख्याह्निकयेति। तन्न्यायेनेत्यर्थः। कश्चित् वादी। अन्यः प्रतिवादी। उत्तरमिदम्। आदावुत्तरत्वं साधयति। इदमिति। तावत् आदौ। तत्त्वस्यैवोत्तरत्वस्य प्रागुक्तत्वादाह। पश्चेति। साङ्कर्यं प्रतिपादयति। नापीति। एवेनान्यव्यवच्छेदः। तथा चासाङ्कर्यम्। कारणं कारणमेव। एकदेशस्य ग्रहणस्य साङ्कर्यमुपसंहरति। तस्मादिति। सकारणमिति। अत्र कारणस्याप्राधान्यं मिथ्योत्तरस्य प्राधान्यं तस्य तदुपपादकत्वस्यापि सम्भवात्। अत एव तत्र सहयोगे तृतीया कृता। प्रागुक्तबाधकस्याचाभावमाह। अत्र चेति।

९। प्रतिवादिना तस्यैव उक्तमभिप्रेत्य प्रधानन्यायादरेण शङ्कते। नन्विति। परिहरति। नेति। तत्र हेतुमाह। तस्येति। वचनस्येत्यर्थः। तुल्ययुक्त्या शङ्कते। कारणे इति। एवं चानुत्तरत्वमेवैतस्येति भावः। ननु शुद्धकारणोत्तरं प्रागुदाहृतं प्रसिद्धमेवेति तदभावोक्तिरयुक्ता ऽत आह। प्रसिद्धेति। सत्यं गृहीतं प्रतिदत्तं चेत्येवं रूपे प्रागुक्तेऽपीत्यर्थः। प्रतिग्राहार्थेकेति। ग्रहण-

Digitized by Google

ष्वेत्यर्थः। नैकेति। साधारणस्येत्यर्थः। उदाहरणेनेदं विशदयति। यथेति। प्रकृतोदेति। अन्यस्तु मिथ्यैतत् मत्प्रदर्शितकालादि-त्यादिपूर्वोक्ते इत्यर्थः। देशस्येति। तस्यापीत्यर्थः। क्वचित्तथा पाठ एव। विशेष इति। मिथ्यासहचरितरूपत्वं तूभयत्र समानमिति भावः। एवमिद्धेऽर्थे मानमप्याह। एतच्चेति। वापीति। अनेन चिरांकर्येऽपि कारणमेव ग्राह्यमिति दर्शितम्। प्रतिप्रसवान्तरमाह। यत्रेति। यत्र चेत्यर्थः। एवमुत्तरत्वे साधिते तन्निर्वाहोपायमाह। अत्रापीति। मिथ्याक्रियेत्यस्य शुद्धमिथ्याविषयत्वादाह। प्रतीति। एतेन वादिव्यवच्छेदः। अत एवाह। प्राङ्न्यायेति। नन्विदं कारणप्राङ्न्यायसंकरविषयतया पूर्वमुक्तमिति कथमत्र प्रवृत्तिरत आह। शुद्धेति। अन्यथेतिशेषः। तथा च संकीर्णत्वा-त्तत्त्वप्रसंगो, न च तद्युक्तं पक्षव्यापित्वादिति भावः। यदा शुद्धस्य प्राङ्न्यायस्याभावादुत्तरे क्रियाबोधके ऽपाठात्तत्र कस्यापि क्रियाया अलाभेन सर्वस्यापि प्राङ्न्यायस्यानुत्तरत्वप्रसक्तो, न च तद्युक्तं तत्र तस्य गणनात्। तथा च यथा तयोस्तत्र तस्य प्रवृत्तिस्तथा कारणस्य मिथ्यासहचरितरूपत्वात् सांकर्ये प्रवृत्तिरिति भावः। शुद्धप्राङ्न्याये तु वक्ष्यति व्याख्यातत् प्राङ्न्यायविधिसिद्धौ-त्विति।

१०। ननु पक्षनिराकरणसमर्थस्यैवोत्तरत्वे संप्रतिपत्तेरनुत्तरत्व-प्रसक्तस्तदभावादत आह। संप्रतिपत्तेरपीति। उत्तरत्वमित्य-न्वयः। नोपेति। प्रत्यर्थिनेति भावः। एवं यत्र प्रतिवादिना एकक्रियास्थले उक्ता तस्यैव क्रियाद्वयप्रसंगो यत्र प्रागुक्तस्य

विशेषं प्रतिपादयन्प्रतिप्रसवान्तरमाह । **यदा त्विति** । यदा ऽपीत्यर्थः । **तत्र** तत्रापि । **यथारुचीति** । तत्रैव तयोर्मध्ये ऽन्यतरक्रियेत्यर्थः । संकीर्णोत्तरस्य युगपदनुत्तरत्वमुक्तमुपसंहरति । **इति न क्वचिदिति** ।

११ । **निवेशिते** लेखिते । प्रागुक्तव्युत्पत्तेराह । **साध्यवानिति** । स्पष्टार्थमाह । **प्रतीति** । भावेऽर्थासङ्गतेरिष्टासिद्धेश्चाह । **साध्यतइति** । प्रमाणं लिखितादि वक्ष्यमाणम् । पूर्वंच न्यूनतां निराचष्टे । **अचेति** । *अपिना सद्यः । मिथ्याक्रियेत्यादिप्रागुक्तार्थस्य मूलारूढत्वं सूचयन्नर्थिशब्दस्यात्र यौगिकत्वं न योगरूढत्वमिति सूचनद्वारा न्यूनत्वाभावं प्रतिपादयति । **अर्थीति** । वर्त्तमानसत्तोपाधिकामतुबाद्युत्पत्तेराह । **अस्तीति** । अपिः पूर्वसमुच्चये तेन साम्यम् । तुर्वैलक्षण्ये । **निर्दिशेत्** लेखयेत् । स्पर्थान्तर्भावः प्राग्वत् । अन्यदप्याह । **तथेति** । **अर्थोवेति** । आक्षेपादेव कर्तृलाभे तदुक्तिर्नियमार्थेति भावः । **अतश्चेति** । गम्यते इत्यत्राऽन्वयः । **तावतैव** तादृशोत्तरदानेनैव । अत्र सर्वत्र मानमाह । **एतदेवेति** । अर्थीत्यादिनोक्तमेवेत्यर्थः । **प्राड्न्यायेति** । अस्याशय उक्तः । वादी तु क्रियां निर्दिशेत् । **सा क्रिया ॥ ७ ॥**

---

* कालविलम्बनमपि इति मिताक्षरास्थेन अपिशब्देन सद्य इत्यर्थो बोध्यः । उत्तराभिधाने कालविलम्बनमङ्गीकृतं न तु शीघ्रमुत्तरदानस्याङ्गीकार इति भावः ।

१। ततः साधनलेखनोत्तरम् । **प्रकारान्तरे** इत्यस्य व्याख्या **साधनासिद्धाविति** । **एवं** व्यवहारतद्विषयादिकथनप्रकारेण । **रूपं** स्वरूपम् । व्यवहारपदार्थं स्पष्टार्थमाह । **व्यवेति । सोऽयं** व्यवहारोऽयम् । **इत्थम्** उक्तप्रकारेण । मुख्यपादलाभभवादाह । **चतुरंशेति** । ऋणादानादिषु वक्ष्यमाणेषु विषये ।

२। तानेवांशान् विभज्य दर्शयति । **तत्रेति** । तेषां मध्ये इत्यर्थः । **विप्रतिपत्तिषु** सतीषु । अस्य न सार्वत्रिकत्वमित्याह । **संप्रतीति** । अनिर्देशे हेतुमाह । **भाषार्थेति** । **चः** समुच्चय इत्यर्थे योज्यः । तेन क्रियापादसमुच्चयः । यद्वा चो हेतुसमुच्चये एव । **स्मृताः** । क्वचणोऽपि । क्वचित्तथा पाठ एव । अत एवाह । **द्विपात्त्वमेवेति** ।

३। न्यूनतां निराचष्टे । **उत्तरेति । अर्थिप्रत्यर्थिनोः**, मध्ये इति शेषः । **प्रत्येति** । पौनःपुन्येन विचारणस्येत्यर्थः । अस्य व्यभिचरितत्वादाह । **व्यवेति** । अर्थ्यादिसम्बन्धिन एव तत्त्वमिति भावः ॥ ८ ॥

## इति साधारणव्यवहारमातृका ।

१। प्रकृते योगरूढत्वमर्थान्तरनिरासायाह । **अभियुज्यते इति** । दोषविषयीक्रियते इत्यर्थः । येनेति शेषः । करणे घञः सौलभ्यात् । यथाश्रुतं वा । सम्बध्यते इति तदर्थात् । एनमित्यत्र कथितानुकथनसंख्यानाद्देशविषयस्वाद्देनादेशः । अपराधेनेत्यस्य विशेषपरत्वाय शङ्कते । **यद्यपीति** । सत्यं गृहीतं प्रतिदत्तं चेति कारणोत्तरस्य अनेन दत्तं स्थितं मया पुनर्दत्तमित्येवं प्रत्यभियोगरूपत्व-

मित्यर्थः । विषयमिति । तथा चाभियोगनिवारकमेव प्रत्यभि-
योगं कुर्यादेव न तदनिवारकम् । अन्यथा सत्यं मिथ्योत्तर-
मित्यादिना चातुर्विध्यकथनस्यैवासङ्गतत्वापत्तेरेतन्निषेधवैयर्थ्यापत्तेश्च ।
तदाह । अत इति । अनुपमर्दनेति । करणे ल्युट् । निषेध
इति । नैनं प्रत्यभीति निषेध इत्यर्थः । तथैव स्पष्टयत्याह ।
इदमिति ।

२ । कृते कर्मणि निष्ठायां तन्निस्तारे जाते तस्येष्टत्वेनासङ्गतिं
परिहरति । अनिस्तीर्णेति । भावनिष्ठाख्यात्मनर्थोऽभियोगोऽस्तीति
भावः । अन्येनेत्यस्य पूर्वाभियोगे सम्बन्धात् योग्यतया शेष-
माह । अन्योऽर्थीति । प्रतीत्यस्य सम्बन्धायोग्यत्वात्तत्पदार्थमाह ।
नाभीति ।

३ । नोक्तमित्याद्युक्तिरपाणनन्तर्यादर्थिनं प्रत्येवेत्याह । किं चेति ।
प्रकृतिशब्दः स्वभावार्थको दुस्त्यजा प्रकृतिरित्यादौ दृष्टः । प्रकृतिस्तु-
मेतत्तात्पर्यार्थमाह । एतदिति । तथैवेति । अन्यथा ऽन्यथा-
वादित्वेन भङ्गप्रसङ्गादिति भावः । इदं प्रतिपादितमधस्तात् ।
अपिः तस्यैव समुच्चये । एवमग्रेऽपि । अत एवाह । नन्विति ।
तदेवेति । तथा च वस्त्वन्तरकथननिवृत्तिस्तेन क्रियते । एकस्मि-
न्नपि पदे ऋणादानादिव्यवहारविषये इत्यर्थः । एवव्यवच्छेद्यमेवाह ।
न वस्त्वन्तरमिति । तदेवोदाहरणकथनेन विशदयति । यथेति ।
यद्यपि ऋणादाने रूपकमेव व्यवहारविषयो भवति तथापि
रूपकशतस्थाने वस्त्रशतोक्त्या वस्त्वन्तरोपादानमिति तन्निषेधस्तेन
क्रियते इति भावः । एतेन शतरूपस्य विषयस्यैकत्वादयुक्तमिद-

मित्यपास्तम्। प्रागुक्तं दार्ढ्याय स्मारयति। तथा सतीति। पदान्तरागमेति। विषयान्तरं प्रत्यगमनेऽपीत्यर्थः। अत्र प्रकरणे पदशब्दो विषयवाची। इत्यनेन इत्यनेन तु। यथेति। अत्र रूपकशतरूपवस्तुन एकत्वेऽपि ऋणादानापहरणरूपयोर्व्यवहारविषययोर्भिन्नत्वेन तद्गमनमनेन नोक्तमित्यनेन निषिध्यते इत्यर्थः। उक्तमेव स्पष्टार्थमुपसंहरति। तचेति। प्रत्यर्थिन इत्यचेत्यर्थः। वैपरीत्याशङ्का तु न। 'यथावेदितं, 'नोक्तं विप्रकृति'मित्येतत्स्वारस्यात्।

४। तत्राद्ये मानस्योक्तत्वात् द्वितीये तदाह। एतद्देवेति। द्वितीयमुक्तमेवेत्यर्थः। पदसंक्रेति। पदान्तरं प्रति गमनाद् वस्त्वन्तरगमनाच्चेत्यर्थः। वादेति पाठान्तरम्। तच साधारण्यमस्य बोध्यम्। आद्ये तु प्रकृतपरत्वमेवेति तत्त्वम्। हीनवादी दण्ड्यः स्यादित्युक्तं सविशेषं विशदयति। हीनेति। दण्ड्य एवेत्यर्थः। अत एवाह। न प्रेति। वचनस्यक्रमेणाह। प्रत्येति। सिद्ध्यसिद्धीति। हीनवादित्वे प्रकृतार्थासिद्धिरतथात्वे तत्सिद्धिरित्यर्थः। अत्र मानमाह। अत एवेति। मूलकृदिति शेषः। अस्यार्थोऽग्रे एव स्फुटः। इदमपि न सार्वत्रिकमित्याह। एतच्चेति। हीनवादी दण्ड्य एव, न प्रकृतार्थाद्धीयते इत्येतदित्यर्थः। अर्थेति। उक्तविषयव्यवहारे एवेत्यर्थः। मन्युकृते त्विति। वाक्पारुष्यदण्डपारुष्यादिव्यवहारे इत्यर्थः। अपिना दण्डसमुच्चयः। तथा चैवं विधे वाक्छले व्यवहारहानिर्दण्डश्चेति भावः। उक्तार्थस्य स्पष्टतया ऽभासादाह। अस्यार्थ इति। अर्थपदव्यावर्त्यमाह। न मन्युकृतेष्विति। अन्यच्च तस्य स्पष्टत्वादेवाह। अपीति। नावसीदतीत्यस्य व्याख्या

